# श्रीरङ्गस्तोत्रम्

पद्माधिराजे गरुडाधिराजे
    विरिञ्चराजे सुरराजराजे ।
त्रैलोक्यराजेऽखिलराजराजे
    श्रीरङ्गराजे रमतां मनो मे ॥ १॥

नीलाब्जवर्णे भुजपूर्णकर्णे
    कर्णान्तनेत्रे कमलाकलत्रे ।
श्रीमल्लरङ्गे जितमल्लरङ्गे
    श्रीरङ्गरङ्गे रमतां मनो मे ॥ २॥

लक्ष्मीनिवासे जगतां निवासे
    हृत्पद्मवासे रविबिम्बवासे ।
क्षीराब्धिवासे फणिभोगवासे
    श्रीरङ्गवासे रमतां मनो मे ॥ ३॥

कुबेरलीले जगदेकलीले
    मन्दारमालाङ्कितचारुफाले ।
दैत्यान्तकालेऽखिललोकमौले
    श्रीरङ्गलीले रमतां मनो मे ॥ ४॥

अमोघनिद्रे जगदेकनिद्रे
    विदेहनिद्रे च समुद्रनिद्रे ।
श्रीयोगनिद्रे सुखयोगनिद्रे
    श्रीरङ्गनिद्रे रमतां मनो मे ॥ ५॥

आनन्दरूपे निजबोधरूपे
    ब्रह्मस्वरूपे क्षितिमूर्तिरूपे ।
विचित्ररूपे रमणीयरूपे
    श्रीरङ्गरूपे रमतां मनो मे ॥ ६॥

भक्ताकृतार्थे मुररावणार्थे
    भक्तसमर्थे जगदेककीर्ते ।
अनेकमूर्ते रमणीयमूर्ते
    श्रीरङ्गमूर्ते रमतां मनो मे ॥ ७॥

कंसप्रमाथे नरकप्रमाथे

दुष्टप्रमाथे जगतां निदाने ।
अनाथनाथे जगदेकनाथे
श्रीरङ्गनाथे रमतां मनो मे ॥ ८॥

सुचित्रशायी जगदेकशायी
नन्दाङ्कशायी कमलाङ्कशायी ।
अम्भोधिशायी वटपत्रशायी
श्रीरङ्गशायी रमतां मनो मे ॥ ९॥

सकलदुरितहारी भूमिभारापहारी
दशमुखकुलहारी दैत्यदर्पापहारी ।
सुललितकृतचारी पारिजातापहारी
त्रिभुवनभयहारी प्रीयतां श्रीमुरारिः ॥ १०॥

रङ्गस्तोत्रमिदं पुण्यं प्रातःकाले पठेन्नरः ।
कोटिजन्मार्जितं पापं स्मरणेन विनश्यति ॥
इति श्रीरङ्गस्तोत्रम् सम्पूर्णम् ॥